ततोऽन्तरिक्षाद्भगवानवतीर्य पुरन्दरः ।
मरुद्गणैर्वृतः पार्थं केशवं चेदमब्रवीत् ॥ ७
कृतं युवाभ्यां कर्मेदममरैरपि दुष्करम् ।
वरं वृणीतं तुष्टोऽस्मि दुर्लभं पुरुषेष्विह ॥ ८
पार्थस्तु वरयामास शक्रादस्त्राणि सर्वशः ।
प्रदातुं तच्च शक्रस्तु कालं चक्रे महाद्युतिः ॥ ९
यदा प्रसन्नो भगवान्महादेवो भविष्यति ।
तदा तुभ्यं प्रदास्यामि पाण्डवास्त्राणि सर्वशः ॥१०
अहमेव च तं कालं वेत्स्यामि कुरुनन्दन ।
तपसा महता चापि दास्यामि भवतोऽप्यहम् ॥११
आग्नेयानि च सर्वाणि वायव्यानि च सर्वशः ।
मदीयानि च सर्वाणि ग्रहीष्यसि धनञ्जय ॥१२
वासुदेवोऽपि जग्राह प्रीतिं पार्थेन शाश्वतीम् ।
ददौ सुरपतिश्चैव वरं कृष्णाय धीमते ॥ १३
एवं दत्त्वा वरं ताभ्यां सह देवैर्मरुत्पतिः ।
हुताशनमनुज्ञाप्य जगाम त्रिदिवं प्रभुः ॥ १४
पावकश्च तदा दावं दग्ध्वा समृगपक्षिणम् ।
अहोभिरेकविंशद्भिर्विरराम सुतर्पितः ॥ १५
जग्ध्वा मांसानि पीत्वा च मेदांसि रुधिराणि च ।
युक्तः परमया प्रीत्या तावुवाचाच्युतार्जुनौ ॥ १६
युवाभ्यां पुरुषाग्र्याभ्यां तर्पितोऽस्मि यथासुखम् ।
अनुजानामि वां वीरौ चरतं यत्र वाञ्छितम् ॥ १७
'गाण्डिवं च धनुर्दिव्यमक्षय्यौ च महेषुधी ।
कपिध्वजो रथश्चायं तव दत्तो महामते ॥ १८
अनेन धनुषा चैव रथेनानेन भारत ।
विजेष्यसि रणे शत्रून्सदेवासुरमानुषान् ॥' १९
एवं तौ समनुज्ञातौ पावकेन महात्मना ।
अर्जुनो वासुदेवश्च दानवश्च मयस्तथा ॥ २०
परिक्रम्य ततः सर्वे त्रयोऽपि भरतर्षभ ।
रमणीये नदीकूले सहिताः समुपाविशन् ॥ २१

॥ इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां आदिपर्वणि मयदर्शनपर्वणि षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

॥ समाप्तं मयदर्शनपर्वादिपर्व च ॥

---

इतः परं सभापर्व भविष्यति तस्यायमाद्यः श्लोकः ।
जनमेजय उवाच ।
अर्जुनो जयतां श्रेष्ठो मोचयित्वा मयं तदा ।
किं चकार महातेजास्तन्मे ब्रूहि द्विजोत्तम ॥ १

---

अहानि पञ्च चैकं च इति ख. पाठः ॥ १५ ॥

षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

इदमादिपर्व कुंभघोणस्थेन टी. आर्. कृष्णाचार्येण टी. आर्. व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८२८ सन १९०६.

CENTRAL ARCHAEOLOGICAL LIBRARY New Delhi

